मृत्युञ्जयस्तोत्र १ मार्कण्डेयप्रोक्तं नरसिंहपुराणे
विष्णुमृत्युञ्जयस्तोत्रम् ।

ॐ नमो भगवते मृत्युञ्जयाय ।

ततो विश्णवर्पितमना मारकण्डेयो महामतिः ।
तुष्टाव प्रणतो भूत्वा देवदेव जनार्दनम्
विष्णुनैवोपदिष्टं तु स्तोत्रं कर्णे महामनाः ।
सम्भावितेन मनसा तेन तुष्टाव माधवम् ॥

ॐ नमो भगव्ते वासुदेवाय ।
मार्कण्डेय उवाच -
नारायणं सहस्राक्षं पद्मनाभं पुरातनम् ।
प्रणतोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति ॥ ६३॥

गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम् ।
केशवं च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६४॥

वासुदेवं जगद्योनिं भानुवर्णमतीन्द्रियम् ।
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६५॥

शङ्खचक्रधरं देवं छन्नरूपिणमव्ययम् ।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६६॥

वाराहं वामनं विष्णुं नरसिंहं जनार्दनम् ।
माधवं च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६७॥

पुरुषं पुष्करं पुण्यं क्षेमबीजं जगत्पतिम् ।
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६८॥

भूतात्मानं महात्मानं जगद्योनिमयोनिजम् ।
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६९॥

सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् ।
महायोगं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ७०॥

इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः ।
अपयातस्ततो मृत्युर्विष्णुदूतैश्च पीडितः ॥ ७१॥

इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता ।
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ॥ ७२॥

मृत्युञ्जयमिदं पुण्यं मृत्युप्रशमनं शुभम् ।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥ ७३॥

य इदं पठते भक्त्या त्रिकालं नियतः शुचिः ।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥ ७४॥

हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमादिदेवम् ।
सञ्चिन्त्य सूर्यादपि राजमानं मृत्युं स योगी जितवांस्तदैव ॥ ७५॥

इति ।

नरसिंहपुराण अध्याय ७ श्लोकसंख्या ७५
इति श्रीनरसिंहपुराणे मार्कण्डेयमृत्युञ्जयो नाम सप्तमोऽध्यायः ॥ ७॥

॥ मृत्युञ्जयस्तोत्रम् २ नरसिंहपुरने ॥

मार्कण्डेय उवाच
नमोऽस्तु ते देवदेव महाचित्त महाकाय महाप्राज्ञ महादेव महाकीर्ते
ब्रह्मेन्द्रचन्द्ररुद्रार्चित पादयुगल श्रीपद्महस्त सम्मर्दितदैत्यदेह ॥ ३३॥

अनन्तभोगशयनार्पितसर्वाङ्ग
सनकसनन्दनसनत्कुमाराद्यैर्योगिभिर्नासाग्रन्यस्तलोचनैरनवरतमभिचिन्तितमोक्षतत्त्व
।
गन्धर्वविद्याधरयक्षकिन्नरकिम्पुरुषैरहरहोगीयमानदिव्ययशः ॥ ३४॥

नृसिंह नारायण पद्मनाभ गोविन्द गोवर्धनगुहानिवास योगीश्वर
योगधर देवेश्वर जलेश्वर महेश्वर ॥ ३५॥

योगधर महामायाधर विद्याधर यशोधर कीर्तिधर त्रिगुणनिवास
त्रितत्त्वधर त्रेताग्निधर ॥ ३६॥

त्रिवेदभाक् त्रिनिकेत त्रिसुपर्ण त्रिदण्डधर ॥ ३७॥

स्निग्धमेघाभार्चितद्युतिविराजित पीताम्बरधर
किरीटकटककेयूरहारमणिरत्नांशुदीप्तिविद्योतितसर्वदिश ॥ ३८॥

कनकमणिकुण्डलमण्डितगण्डस्थल मधुसूदन विश्वमूर्ते ॥ ३९॥

लोकनाथ यज्ञेश्वर यज्ञप्रिय तेजोमय भक्तिप्रिय वासुदेव
दुरितापहाराराध्य पुरुषोत्तम नमोऽस्तु ते ॥ ४०॥

इति ।

नरसिंहपुराण अध्याय १० श्लोकसंख्या ५२
श्रीनरसिंहपुराणे मार्कण्डेयचरित्रे दशमोऽध्यायः ॥ १०॥

श्रीमृत्युञ्जयस्तोत्रम् ३
ॐ नमो मृत्युञ्जयाय ।
नन्दिकेश्वर उवाच -
कैलासस्योत्तरे शृङ्गे शुद्धस्फटिकसन्निभे ।
तमोगुणविहीने तु जरामृत्युविवर्जिते ॥ १॥

सर्वार्थ सम्पदाधारे सर्वज्ञानकृतालये ।
कृताञ्जली पुटो ब्रह्मा ध्यानासीनं सदाशिवम् ॥ २॥

पप्रच्छ प्रणतो भूत्वा जानुभ्यामवनिङ्गतः ।
सर्वार्थसम्पदाधार ब्रह्मा लोकपितामहः ॥ ३॥

ब्रह्मोवाच -
केनोपायेन देवेश चिरायुर्लोमशोऽभवत् ।
तन्मे ब्रूहि महेशान लोकानां हितकाम्यया ॥ ४॥

श्रीसदाशिव उवाच -
शृणु ब्रह्मन् प्रवक्ष्यामि चिरायुर्मुनिसत्तमः ।
सञ्जातः कर्मणा येन व्याधिमृत्युविवर्जितः ॥ ५॥

तस्मिन्नेकार्णवे घोरे सलिलौघपरिप्लुते ।
कृतान्तभयनाशाय स्तुतो मृत्युञ्जयः शिवः ॥ ६॥

तस्य सङ्कीर्तनान्नित्यं मुनिर्मृत्युविवर्जितः ।
तमेव कीर्तयन् ब्रह्मन् मृत्यु जेतुं न संशयः ॥ ७॥

लोमश उवाच -
देवाधिदेव देवेश सर्वप्राण भृतांवर ।
प्राणीनामपि नाथस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥ ८॥

देहिनां जीवभूतोऽसि जीवो जीवस्य कारणम् ।
जगतां रक्षकस्त्वं वै मृत्युञ्जय नमोऽस्तु ते ॥ ९॥

हेमाद्रिशिखराकारे सुधावीचिमनोहर ।
पुण्डरीकपरं ज्योतिर्मृत्युञ्जय नमोऽस्तु ते ॥ १०॥

ध्यानाधार महाज्ञान सर्वज्ञानैककारण ।
परित्रातासि लोकानां मृत्युञ्जय नमोऽस्तु ते ॥ ११॥

निहता येन कालेन सदेवासुरमानुषाः ।
गन्धर्वाप्सरसश्चैव सिद्धविद्याधरास्तथा ॥ १२॥

साध्याश्च वसवो रुद्रास्तथाश्विनिसुतावुभौ ।
मरुतश्च दिशो नागाःस्थावरा जङ्गमास्तथा ॥ १३॥

जितः सोऽपि त्वया ध्यायन् मृत्युञ्जय नमोऽस्तु ते ॥ १४॥

ये ध्यायन्ति परां मूर्तिं पूजयन्त्यमरादयः ।
न ते मृत्युवशं यान्ति मृत्युञ्जय नमोऽस्तु ते ॥ १५॥

त्वमोङ्कारोऽसि वेदानां देवानां च सदाशिवः ।
आधारशक्तिः शक्तीनां मृत्युञ्जय नमोऽस्तु ते ॥ १६॥

स्थावरे जङ्गमे वापि यावत्तिष्ठति देहगः ।
जीवत्यपत्यलोकोऽयं मृत्युञ्जय नमोऽस्तु ते ॥ १७॥

सोमसूर्याग्निमध्यस्थव्योमव्यापिन् सदाशिव ।
कालत्रयमहाकाल मृत्युञ्जय नमोऽस्तु ते ॥ १८॥

प्रबुद्धे चाप्रबुद्धे च त्वमेव सृजसे जगत् ।
सृष्टिरूपेण देवेश मृत्युञ्जय नमोऽस्तु ते ॥ १९॥

व्योम्नि त्वं व्योमरूपोऽसि तेजः सर्वत्र तेजसि ।
ज्ञानिनां ज्ञानरूपोऽसि मृत्युञ्जय नमोऽस्तु ते ॥ २०॥

जगज्जीवो जगत्प्राणः स्रष्टा त्वं जगतः प्रभुः ।
कारणं सर्वतीर्थानां मृत्युञ्जय नमोऽस्तु ते ॥ २१॥

नेता त्वमिन्द्रियाणां च सर्वज्ञानप्रबोधकः ।
सांख्ययोगश्च हंसश्च मृत्युञ्जय नमोऽस्तु ते ॥ २२॥

रूपातीतः सरूपश्च पिण्डस्थपदमेव च ।
चतुर्युगकलाधार मृत्युञ्जय नमोऽस्तु ते ॥ २३॥

रेचके वह्निरूपोऽसि सोमरूपोऽसि पूरके ।
कुम्भके शिवरूपोऽसि मृत्युञ्जय नमोऽस्तु ते ॥ २४॥

क्षयङ्करोऽसि पापानां पुण्यानामपि वर्धनम् ।
हेतुस्त्वं श्रेयसां नित्यं मृत्युञ्जय नमोऽस्तु ते ॥ २५॥

सर्वमायाकलातीत सर्वेन्द्रिय परावर ।
सर्वेन्द्रियकलाधीश मृत्युञ्जय नमोऽस्तु ते ॥ २६॥

रूपं गन्धो रसः स्पर्शः शब्दः संस्कार एव च ।
त्वत्तः प्रकाश एतेषां मृत्युञ्जय नमोऽस्तु ते ॥ २७॥

चतुर्विधानां सृष्टीनां हेतुस्त्वं कारणेश्वर ।
भावाभावपरिच्छिन्न मृत्युञ्जय नमोऽस्तु ते ॥ २८॥

त्वमेको निष्कलो लोके सकलम्भुवनत्रये ।
अतिसूक्ष्मातिरूपस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥ २९॥

त्वं प्रबोधस्त्वमाधार त्वद्बीजं भुवनत्रयम् ।
सत्वं रजस्तमस्त्वं हि मृत्युञ्जय नमोऽस्तु ते ॥ ३०॥

त्वं सोमस्त्वं दिनेशश्च त्वमात्मा प्रकृतेः परः ।
अष्टत्रिंशत्वकलानाथ मृत्युञ्जय नमोऽस्तु ते ॥ ३१॥

सर्वेन्द्रियाणामाधारः सर्वभूतगुणाश्रयः ।
सर्वज्ञानमयानन्त मृत्युञ्जय नमोऽस्तु ते ॥ ३२॥

त्वमात्मा सर्वभूतानां गुणानां त्वमधीश्वरः ।
सर्वानन्दमयाधार मृत्युञ्जय नमोऽस्तु ते ॥ ३३॥

त्वं यज्ञः सर्वयज्ञानां त्वं बुद्धिर्बोधलक्षणा ।
शब्दब्रह्मस्त्वमोङ्कारो मृत्युञ्जय नमोऽस्तु ते ॥ ३४॥

श्रीसदाशिव उवाच -
एवं सङ्कीर्तयेद्यस्तु शुचिस्तद्गतमानसः ।
भक्त्या शृणोति यो ब्रह्मन् न स मृत्युवशो भवेत् ॥ ३५॥

न च मृत्युभयं तस्य प्राप्तकालं च लङ्घयेत् ।
अपमृत्युभयं तस्य प्रणश्यति न संशयः ॥ ३६॥

व्याधयो नोपपद्यन्ते नोपसर्गभयं भवेत् ।
प्रत्यासन्नान्तरे काले शतैकावर्तने कृते ॥ ३७॥

मृत्युर्न जायते तस्य रोगान् मुञ्चति निश्चितम् ।
पञ्चम्यां वा दशम्यां वा पौर्णमास्यामथापि वा ॥ ३८॥

शतमावर्तयेद्यस्तु शतवर्षं स जीवति ।
तेजस्वी बलसम्पन्नो लभते श्रियमुत्तमाम् ॥ ३९॥

त्रिविधं नाशयेत्पापं मनो-वाक्-कायसम्भवम् ।
अभिचाराणि कर्माणि कर्माण्याथर्वणानि च ।
क्षीयन्ते नात्र सन्देहो दुःस्वप्नश्च विनश्यति ॥ ४०॥

इदं रहस्यं परमं देवदेवस्य शूलिनः ।
दुःस्वप्ननाशनं पुण्यं सर्वविघ्नविनाशनम् ॥ ४१॥

इति श्रीशिवब्रह्मसंवादे श्रीमृत्युञ्जयस्तोत्रं सम्पूर्णम् ।